प्राणभ्नूय पुन अन्ययापिंगलयारेच्चयेत् पिंगलयादक्षनाड्या समीरणवायुपीत्वापूरयित्वाअथोपूरणानतरव ध्वाकुंभयित्वावामयाइडयात्यजेत्रेच्च येत् सूर्यश्चचद्रमाश्चतयो देवताद्वंद्वेच इत्यानड् अनेनउक्तेन विधिनाप्रकारेण सदानित्यअभ्यासचंद्रेणा पूर्यकुंभयित्वासूर्येणरेच्चयेत् सूर्येणापूर्यकुं भयित्वाचंद्रेणरेच्चयेदित्याकारकतन्वता विस्तारयितायमिनायमवतानाडिगणा नाडीसमूहा मासत्रयादूर्ध्वंत मासानांत्रितयतस्मादुपरिशुद्धा मलर हिता भवति ४५५ अथप्राणायामाभ्यासकालतदवधिंचाह प्रातरितिप्रात अरुणोदयमारभ्यसूर्योदयात् घटिकात्रयपर्यंते प्रात कालेमध्यंदिनेम ध्यान्हेपंचधाविभक्तस्यदिनस्यमध्यभागे साय सध्यात्रिनाडिप्रमितार्कमस्तादधस्तदूर्ध्वंच इत्युक्तलक्षणेसध्याकाले रात्रेरर्धंअर्द्धरात्रतस्मिन्नर्धरात्रे रात्रेर्मध्यमूहूर्तद्वयेशनै शनै अशीतिपर्यंत अशीतिसख्यावधिचतुर्वारंचतुष्टयकालाभ्यसेत्यतसयोगेइतिद्वितीयान्चतुर्षुकालेषुएकैकस्मिन्कालेअशी

**प्रातर्मध्यंदिनेसायमर्द्धरात्रेचकुंभकान् शनैरशीतिपर्यंतंचतुर्वारंसमभ्यसेत् ४५६ कनीयसिभवेत्स्वेद क योभवतिमध्यमे**

तिप्राणायामा कार्या अर्धरात्रेकर्तुमशक्तश्चेति सध्यकर्तव्याइति सप्रदायचतुर्वारकृताश्चेद्दिनेदिने ३२० विंशत्यधिकशतत्र यपरिमिता प्राणायामा भवतिवारत्रयकृताश्चेच्चत्वारिंशदधिकशतद्वय २४० परिमिताभवति ४५६ कनिष्टमध्यमोत्तमानाप्राणायामानाक्रमेणव्यापकवि शेषमाह कनीयसीति कनीयासकनिष्टे प्राणायामे स्वेद प्रस्वेदोभवत् भवतिस्वेदानुमेय कनिष्ट [illegible] प्राणायामेकंप भवतिकपानुमेयोमध्यम उत्त मेप्राणायामेस्थानब्रह्मरंध्रआप्नोति स्थानप्राप्त्युत्मेयउत्तम तत तस्माद्वायुप्राणनिबधयेत् कनिष्टादीना लक्षणमुक्तलिंगपुराणेप्राणायामस्यमानतुमात्राद्वादशक स्मृतनीचोद्वादशमात्रस्तु सकृदुद्घातईरित मध्यमस्तुद्विरुद्घातश्चतुर्विंशतिमात्रक मुख्यस्तु यस्त्रिरुद्घात षट्त्रिंशन्मात्रउच्यते प्रस्वेदकंपनोत्थानजनकश्च यथाक्रम आनदो [illegible]निद्राघूर्णस्तथैवच रोमांचोध्वनिसविद्धिरगमोटनकंपनश्रवणस्वे दजल्पाद्यसंविन्मूर्छाजयेद्यदा [illegible]मइति प्रोक्त प्राणायाम सुशोभन इतिधूमक्षितादीनगोरक्षोपि [illegible]मेद्वादशप्रोक्तामध्यमेद्विगुणास्मृता उत्तमेत्रिगुणा मात्रा प्राणायामेद्विजोत्तम [illegible] लक्षणतुप्राणेनोत्सर्यमाणेन अपान पीडयनेयद [illegible]वोर्ध्वनिवर्तेन एतदुद्घातलक्षणमात्रामाह याज्ञवल्क्य अगुष्ट

गुलिमोक्षत्रिस्त्रिर्जानुं [illegible] मात्रा [illegible] प्रात्रा मात्रासंज्ञामश्वक्षते स्कंदपुराणे एकश्वासमयी मात्रा प्राणायामे निगद्यते एतद्व्यारव्यातयोगचिं-
तामणौ निद्रावशंगतस्य [illegible] नैकश्वासोगच्छत्यागच्छति च तावत्कालं प्राणायामस्य मात्रेत्युच्यते इति अर्द्धश्वासाधिकद्वादशश्वासाव-
च्छिन्न काल प्राणायामकाल [illegible] श्वासे एव फल भवति एवं च सार्धश्वासपल[illegible]यात्मक कालः प्राणायामकाल सिद्धि सार्द्धद्वादशमात्रामित
प्राणायामोय [illegible] प्राणायाम इत्युच्यते न च पूर्वोदाहृतलिंगपुराणगोरक्षवाक्यविरोध तत्र द्वादशमात्रकस्य प्राणायामाधमत्वोक्तेरिति श-
कनीयं जानु प्रदक्षिणं कुर्यान्न द्रुतं न विलंबितं प्रदद्याच्छोटिकां यावत्तावन्मात्रेति गीयते इति स्कंदपुराणात् अंगुष्ठांगुलिमोक्षं च जानोश्च परि-
मार्जनं प्रदद्याच्छोटिकां [illegible] मात्रेति गीयते इति स्कंदपुराणात् अंगुष्ठानां संख्यायते तदेति दत्तात्रेयवचनाच्च लिंगपुराणगोरक्षादिवा-
क्येषु एकछोटिकावच्छिन्नस्य [illegible] मात्रात्वेन विवक्षितत्वात् याज्ञवल्क्यादिवाक्येषु छोटिकात्रयावच्छिन्नस्य कालस्य मात्रात्वेन विवक्षणात् त्रि

अर्धश्लोक उत्तमे स्थानमाप्नोति ततो वायुं निबंधयेत् ४५७

गुणस्याधमस्योत्तम[illegible]विरोध सर्वेषु योगसाधनेषु प्राणायामो मुख्यः तत्सिद्धौ प्रत्याहारादीनां सिद्धेः तदसिद्धौ प्रत्याहाराद्यसिद्धेः
श्चावश्यकस्तस्य प्राणायाम एव [illegible] तथा चोक्तं योगचिंतामणौ प्राणायामद्विषट्केन प्रत्याहार[illegible]ध्यानधारणस-
माधिशब्दैरुच्यत इति तदुक्तं स्कंदपुराणे [illegible] केन प्रत्याहार उदाहृत प्रत्याहारद्विषट्केन धारणा परिकीर्तिता भवेदीश्वरसंगत्यै ध्यानं
द्वादशधारणं ध्यानद्वादशकेनैव समाधिरभिधीयते यत्समाधौ परंज्योतिरनंतं स्वप्रकाशकं तस्मिन्दृष्टे क्रियाकांडं यातायातं निवर्तते इति तथा धारणा
पंचनाडिभि ध्यानं स्यात् षष्टिनाडिकं दिनद्वादशकेन स्यात्समाधि प्राणसंयमादिति च गोरक्षादिभिरप्येवमेवोक्तं अत्रैव व्यवस्था किंचिदूनद्विचत्वा-
रिंशद्विपलात्मकः कनिष्ठप्राणायामकाल अयमेकछोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया द्वादशमात्रकः कालः किंचिदूनचतुरशीतिविपला-
त्मको मध्यमप्राणायामकाल अयमेकछोटिकावच्छिन्नस्य कालस्य मात्रात्वविवक्षया चतुर्विंशतिमात्रक पंचविंशत्युत्तरशतविपलात्मक उत्तमप्रा

णायामकाल अयमेवैकछोटिकावछिन्नस्यकालस्यमात्राविवक्षया द्वादशमात्रक कालं किंचिदूनचतुरशीतिविपलात्मको मध्यमप्राणायामकाल अयमक
छोटिकावछिन्नस्यकालस्यमात्रत्वविवक्षया चतुर्विंशतिमात्रक पंचविंशत्यत्तरशतविपलात्मकउत्तमप्राणायामकाल अयमेकछोटिकावछिन्नस्यकालस्यमा-
त्रात्वविवक्षयाषट्त्रिंशन्मात्रककाल छोटिकात्रयावछिन्नस्यकालस्यमात्रात्वविवक्षयातु द्वादशमात्रक एवंघपूर्वक पंचविंशत्युत्तरशतविपलपर्यन्तं यदाप्राणा-
यामस्थैर्यंभवतितदाप्राणोब्रह्मरंध्रं गच्छतितब्रह्मरंध्रगत प्राणो यदा पंचविंशतिपलपर्यंततिष्ठतितदा प्रत्याहार यदापंचघटिकापर्यंततिष्ठतितदा धारणा यदाषष्टीघटि-
घटिकापर्यंततिष्ठतितदा ध्यानंयदाद्वादशदिनपर्यंततिष्ठतितदासमाधिर्भवतिइतिरमणीय ४५७ ५८ प्राणायामेनभ्यसता स्वेदेजातेविशेषमाहजलेनेतिश्रमात्प्रा-
णायामाभ्यासश्रमाज्जाततेनजलेनप्रस्वेदेनगात्रस्यशरीरस्यमर्दनतैलाभ्यंगवत्प्राचरेत्कुर्यात्तेनमर्दनेन अस्यदृढतादार्ढ्यंलघुताभावजायतेप्रादुर्भवति ११ अथप्रथमोत्तराभ्यासयो

इडयापिबषोडशभि पवनं कुरुष्व नतुक्षयमतरगस्यअपिंगलयाशनकैः शनकैः दशभिर्दशाभिरधिकैः ४५८ जलेनश्रमजातेनगात्रम-
र्दनमाचरेत् दृढतालघुतापिचतेनगात्रस्यजायते ५९ अभ्यासकालेप्रथमेशस्तंक्षीराज्यभोजनं ततोभ्यासेदृढीभूतेनतादृङ्नियम-
ग्रह ४६० यथासिंहोगजोव्याघ्रोभवेद्वश्य-शनैः शनैः तथैवसेवितोवायुरन्यथाहंतिसाधकं ६१ प्राणायामेनयुक्तेनसर्वरोग
क्षयोभवेत् अयुक्ताभ्यासयोगेनसर्वव्याधिसमुद्भवः ४६२

क्षीरादिनियमाह अभ्यासकालइति क्षीरं दुग्धआज्यघृतं तद्युक्तभोजनं क्षीराज्यभोजनशाकपार्थिवादिवत्समास केवलेकुंभ
केसिद्धेभ्यासोदृढोभवतिसप्रथममन्यत् ४६० सिंहादिवच्छनैरेवप्राणवशयेन्नसहसेत्याहयथेतियथायेनप्रकारेणासिंहो मृगेंद्र गजोवनोहस्ती व्याघ्र शार्दूल शनैरेववं-
श्य स्वाधीनोभवेन्नसहसातथैवतेनैवप्रकारेणसेवितोभ्यस्तोवायुप्राणोवश्योभवेत्अन्यथासहसागृह्यमाण साधक अभ्यासिनंहंतिसिंहादिवत् ६१ युक्ता-
युक्तयो फलमाह प्राणायामेनेतिआहारादियुक्तीपूर्वकोजालंधरादिबंधयुक्तिविशिष्टप्राणायामोयुक्तइत्युच्यतेतेनसर्वरोगक्षय सर्वेषारोगाणाक्षयोनाशोभवेत्
अयुक्तयुक्तिरहित योभ्यास तद्युक्तेनप्राणायामेनसर्वरोगसमुद्भव सर्वेषारोगाणासम्यगुद्भव उत्पत्तिर्भवेत् ४६२ ६२ ६

अधप्रत्याहाराख्योचतुर्थयोगस्तमाह नियच्छेदिति अक्षान् इंद्रियाणि धारणाख्यो पञ्चमयोगस्तमाह मनइति पुनश्च कर्मइति यद्वासनाभिराक्षि
स आकृष्टशुभार्थेभगवद्रूपे ५६९ अथध्यानाख्योषष्ठ योग तमाह तत्रेति एकमेकपादाद्यवयव अव्युच्छिन्नेसमग्ररूपादयुक्तेन आश्रयविशेषे
सामान्यतश्चित्तस्थिरीकरणधारणाअवयवविभावनयातद्दार्ढ्यध्यानमितिभेद अथसमाधिसंज्ञकोसप्तमयोग तमाह निर्विषयमनोयुक्तासमा-
धायस्थिरीभूतेमनसिस्फुरत्परमानंदमात्राकारकृत्वेत्यर्थ प्रसीदतिउपश्याम्यति ५७० अथजीवन्मुक्तिरूपोऽष्टमयोगस्तमाह देहमितित्वर

नियच्छेद्विषयेभ्योक्षान् मनसाबुद्धिसारथिः मनःकर्मभिराक्षिप्तंशुभार्थेधारयेद्धिया ४६९ तत्रैकावयवध्याये
दव्युच्छिन्नेनचेतसा मनोनिर्विषयंयुक्त्वाततःकिंचननस्मरेत् ४७० पदंतत्परमंविष्णोर्मनोयत्र प्रसीदति ४७०
देहंचतंनचरम स्थितमुत्थितंवासिद्धोविपश्यतियतोऽध्यगमत्स्वरूपं दैवादुपेतमथदैववशादपेतंवासोयथापरि
कृतंमदिरामदांध ४७१ एतज्जानातियोयोगीएतत्पठतिनित्यशः सर्वदुःखविनिर्मुक्तोलभतेवांछितंफलं ४७२
स्वरज्ञानंशिरोयस्य लक्ष्मीपादतलेभवेत् स्वरशास्त्रेयोनिमग्नस्तस्यसौख्यंसदाभवेत् ४७३ प्रणवःसर्ववेदाना
प्रसादेभास्करोयथा मृत्युलोकेतथापूज्यःस्वरज्ञानपरायणः ४७४ नाडित्रयंविजानातितत्वज्ञानंतथैवच नैवतेनभ
वेत्तुल्यं लक्षकोटिरसायनं ४७५ एकाक्षरप्रदातारंस्वरभेदनिवेदकं पृथिव्यांनास्तितद्द्रव्यं यद्दत्वाचानृणोभवेत् ४७६
एवमवर्तितंलोकेप्रसिद्धंसिद्धयोगिभिः आचंद्रार्कंगृहेजीयात्पठतांसिद्धिदायकं ४७७

म उक्तलक्षणसिद्ध देहमपिनन
पश्यति आसनादुत्थितमुत्थायकर्मवशात्स्थितंनतत्स्थानादपेतंततोदैववशात् पुनरपिउपेतवानविपश्यतियत्त स्वरूपमास देहस्य अननुसंधाने दृ-
ष्टांत-परिहितकटितटपरिवेष्टितमदिरा...ना ४७१ एतत्स्वरमार्त्तंडपठनस्यफलमाह एतदितिस्पष्टार्थ ४७२ एतच्छास्त्रस्यसम्यक्ज्ञाने
फलश्रुतिमाह स्वरइति ७३ ७४ ७५ ७६ ४७७ ६ ६ ६

वाहि कस्ययज्ञसमारंभे यज्ञेपंचदिनात्मके अनागमाच्चसावित्र्या मुहुर्त्तोतिक्रमेतदा उत्पन्नाश्रीजगन्मातागायत्री ब्रम्हरूपिणीति ४८१ खंडद्वयसमन्वित पूर्वोत्त र भागद्वयसंयुत पूर्वभागेबाह्यस्वर वर्णनंउत्तरभागेअत स्वरवर्णनमस्तीत्यर्थ तथाचोक्तमत्रैव प्रश्नस्कंधेप्र-

अध्याय पूर्णताप्राप्त खंडद्वयसमन्वित स्वरमार्त्तंड संज्ञोवै तदग्रेकेरलक्रम ४८२ प्रार्थयेसर्वविदुषाक्षम्ध्वंमेपराधकं यदत्रकुकृततद्वैनिर्मलंकुरुतादरात् ४८३ इतिश्रीमज्ज्योतिर्वित्कुलावतंसगुर्जरब्राम्हणव्यंकटरामात्मजहरिकृष्णाविनिर्मिते बृहज्ज्योतिषार्णवे पंचमे प्रश्नस्कंधे स्वरमार्त्तंडाध्याये उत्तरखंडे द्वादशमप्रकरण १२॥ ७ ॥ समाप्तोयं प्रश्नस्कंधे स्वरमार्त्तंडाध्यायश्चतुर्थ ४॥ ७ ॥ श्रीदत्तात्रेयार्पणमस्तु ॥ ७ ॥

थमाध्याये स्वरशास्त्रंद्विधाप्रोक्त बाह्याभ्यंतरभेदत बाह्यज्योतिर्विदा यत्त योगिनामंतरंगकमिति तदग्रे पंचमेध्याये केरलक्रमः केरलमत प्रश्नभेदानामनुक्रम मयाप्रोच्यत इतिशेष ४८२ ४८३ इतिश्रीबृ ज्योतिषार्णवे प्र स्वरकृतस्वरमार्त्तंडव्याख्यायां द्वादशमप्रकरण १२

## अथस्वरमार्त्तंडाध्यायानुक्रमणिकाप्रारंभ

## अथरोगप्रकरण



## अथयुद्धप्रश्नप्रकरण



## अथनृपप्रश्नप्रकरण



## अथसंतानगर्भप्रकरण

## अथोत्तरभागानुक्रमणिका

इतिस्वरमार्त्तंड समाप्त.

६ ६ ६
६ ६
६

# प्रार्थना.

सज्जन लोकोकु प्रार्थना यह है की इसग्रथके उद्योगमे समस्तसरलोकोने विघ्न बोहोत लायेउ सकेलिये और प्रथमारभि यह ग्रथ निकाले उसके लिये औररचनाकरना शोध करना-और मुद्रित करना यह तीनो उद्योग एकमनुष्यने करना ऐसे परिश्रमसे अशुद्ध रह्या होवेगा सो क्षमा करनाचाहिये

# सूचना.

यह ग्रथका भाषांतर अथवा न्युनाधिक्य करनेका सबतरोसे हक्क मालकने अपने पास रखाहै

यहपुस्तक शेहेर औरंगाबादमे जोशिहरिकृष्णा व्यंकटराम उनोके श्रीगायत्रीमंदिर "विद्याप्रकाश"

॥ इति बृहज्ज्योतिषार्णवप्रश्नस्कंधेस्वरमार्तंडाध्यायश्चतुर्थस्सं ॥

छापखाने मे छपागयाहै यहग्रंथउपर लिखेहुवे छापखानेमे औरमुंबईमेसबठीकाने मिलेगा (किंमत २॥ रु

अथबृहज्ज्योतिषार्णवप्रश्नस्कंधेकेरलप्रश्नाध्यायःप्रारभ्यते

श्रीगणेशायनम अथकेरलप्रश्नाध्याय प्रारभ्यते अथनिर्विघ्नतयाग्रंथसमाप्त्यर्थमादिमध्यावसानेषु मंगलस्यनिरूपणमावश्यक
मितिशास्त्रात् मतानतर शास्त्र निरूपणारंभे स्वेष्टदेवता तच्छास्त्रेष्टदेवताश्च नमस्करोति वृषवाहन विघ्नेशमिति वृषोत्रमूषक तत बाद्यस्वर-
प्रश्नांत स्वरप्रश्नेतिद्विविध स्वरप्रश्न कथनानतर १ केरलप्रश्न संग्रह केरल प्रश्नभेदाना संग्रह केरलप्रश्न स्यानेक भेदत्वात्सर्वभेदाना संग्रह
अत्तयेवोक्त मयापूर्व प्रश्न प्रस्तावनाध्याये मुनिभिर्बहुधागीतं केरल तत्ववेदिभि अत केरलभेदा वैबहव सतिभोबुधा कलौचकेरलीन
विद्यानध्यतायातिनिश्चित नस्माद्धे पचमेऽध्याये केरल प्रश्नउच्यत इति २ गर्गेणगर्गमुनीश्वरेण अतिसूक्ष्मा स्वल्पाक्षरार्थबाहुल्यातद्वि-

**श्रीगणेशायनमः अथपचम केरलप्रश्नाध्यायः वृषवाहनविघ्नेशांशिशिवबाहासरस्वतीं स्वेष्टंचबटुक-**
**नत्वापितरंव्यकटतथा १ श्रीगौतमकुलोत्पन्नोज्योतिर्विद्यकटात्मजः हरिकृष्णकरोम्यत्रकेरलप्रश्नसंग्रह २**
**गर्गेणोक्ताभगवताविश्वस्यहितकाम्यया प्रश्नविद्यातिसूक्ष्माचलोकेलोकमनोरमा ३ पराशरेणमुनिनामै**
**त्रेयायस्वशास्त्रके याविद्याकेरलीप्रोक्तामन्त्रबीजसमान्विता४ शिवेनोक्ताचपार्वत्यैजगद्धेतोः प्रसिद्धिदा प**
**चपक्ष्यभिधाविद्याकेरलेमुरव्यतागता ५ आयप्रश्नादिकाविद्याह्यनेकऋषिभाषिता सतिनानाविधास्तावैग्र**
**हीत्वाकथयाम्यह ६** द्याया लोकमनोरमाइतिनाम ३ स्वशिष्यायमैत्रेयाय स्वशास्त्रके बृहत्पाराशरीहोरायाश्चोत्तरखडे
अष्टा दशाध्याये मन्त्रबीजसमन्विता प्रश्न सिद्धिकरीमन्त्रविद्यासहिता ४-५ आदिशब्देनहंसचक्र ज्ञानदीपलपाकादीनाग्रहण ६ भाषा
वृषवाहनजोगणपति और सरस्वति और इष्टबटुकनाथ इनकु नमस्कार करके १ केरल मतके प्रश्नोकासंग्रह करताहु २ उसमेहालप्रथम गर्गमुनी
कीकरीहुइ कहते है ३ बाद पराशमुनी प्रणीताविद्या ४ फिर अगस्तिसूत्रानुसार पचपक्षि प्रश्नविद्या ५ बाद आयप्रश्नादिक अनेक प्रश्नविद्याकेभेदआ
रूढलग्नादिकउपर सेजोदेखनेकिवोसबोकासंग्रह करके यहकेरल प्रश्नविद्याकासंग्रहाध्याय मयकहताहु ६ ५ ५ ५

| वर्गचक्रं | | |
|---|---|---|
| श ८ | अ १ | क २ |
| य ७ | | च ३ |
| प ६ | त ५ | ट ४ |

अथोदाहरण वर्गाष्टौ कादिक्षातावर्णा पंचत्रिंशत् तेषां यत्प्रमाणंस आदिकाकभूत पुन किंभूतस्वरसंयुक्तषोडशतेषायत् ह्रस्वदीर्घविभेदत अकाराद्या अनुस्वारविसर्गांताद्याद्येकाधिकसंख्यायास्वरोदयशा

| वर्णचक्रं | | | | | | |
|---|---|---|---|---|---|---|
| क २ | च ४ | ट ५ | त ६ | प ७ | य ८ | ष १ |
| ख ४ | छ ५ | ठ ६ | थ ७ | फ ८ | र ९ | स ११ |
| ग ५ | ज ६ | ड ७ | द ८ | ब ९ | ल १० | ह १२ |
| घ ६ | झ ७ | ढ ८ | ध ९ | भ १ | व ११ | क्ष १३ |
| ङ ७ | ञ ८ | ण ९ | न १० | म ११ | श ९ | १६ञ ञ ५ |

नेनतद्विप्रकटं ककाराद्यङ करातत्रिसंख्याद्यातसतच प्रमाणप्रकचा दीनावर्गाष्टानामेकाधिक २ ४ ५ ६ ७ स्वर वर्ण वर्ग यन्त्रेषुतेषा भादिप्रभादिकाकप्रमाणेनतद्युक्त एतदुक्तभवतिवर्गोद्विविध एवचरविवर्ग तत्प्रकारमाह र४चं२१म१४बु९गु६शु३ श११शोगायोग११ अवर्ग१क२च३ट४त५प६य७श८ अनधदथत९इक५ड खसशवयेरूख७यओहह्लक्ष ञअनऊगकऔलअदधु

**अथतत्रादौलोकमनोरमाख्याप्रश्नविद्यासोदाहरणाप्रारभ्यते प्रणम्यानंदरूपंतमानंदैकनिकेतनं ग- गोबुद्धिमतांप्रीत्यैप्रश्नविद्याऽमयाकरोत् १ अथपिंडोत्पत्ति वर्गवर्णप्रमाणत्वस्वरस्ताडितमिथ. पिं डसंज्ञाभवेत्तस्ययथाभागैस्तुकल्पना २**

थजवभमतएट अथैषास्यपृच्छाणि अथोदाहरणेन प्रकटीकरोति फलना- मबोर अत्रबकारेप्रमाण ९ ओकारस्वरे प्रमाण१५तेनयुक्तजात २३ रकारेप्रमाण ९ अकारेप्रमाण२अनेनयुक्तजात ११ अथमिथ ताडित नामगुणित कर्त्तव्यमित्यर्थ यथात्रयोविंशतिभि २३ रेकादशाभिर्घातजात रूप अनस्यपिंडइति संज्ञा रक्षिता तद का- २५३ अथवान्यप्रकार बोर बकारवर्गप्रमाणद्कारवर्ग७ युक्तजात१३ वर्गवर्णौप्रमाणो वर्ग६ वाऽक्षर पफब ३ युतजात९रकारेवर्ग ७ अक्षर २ युतजात ९ वर्गवर्णौयुतोजाताका १८ स्वरोओ१४ युक्ताका १६ पुनः वर्णस्वरौउभयोकायुतंशोषाका ३४ वर्णाक्षरांकेनवर्गवर्णाक्षराभिर्घात ३४ १३ तदका मुख्यपक्ष

| स्वरचक्रं | | | |
|---|---|---|---|
| अ २ | आ ३ | इ ४ | ई ५ |
| उ ६ | ऊ ७ | ऋ ८ | ॠ ९ |
| ऌ १० | ॡ ११ | ए १२ | ऐ १३ |
| ओ १४ | औ १५ | अं १६ | अः १७ |

तस्यसंख्या ४४२ पिंडसंज्ञा अंकयोगस्य बोरेत्यक्षरद्वय २ तयोर्वर्गवर्णयुत १६ स्वराक्षर १८ तेनयुत ३४ त्रयोदशेन गुणित ४४२ पिंड स्यात् इति प्रश्नभागे कल्पनाकार्या तत्रप्रथम पूर्वान्हे बालकमुखात् फलनाम श्रुत्वा मध्यान्हे युवामुखात् वृक्षनाम श्रुत्वा सायान्हे वृद्धमुखात् पुष्पनाम श्रुत्वा रात्रौतु देवनद्यादिनाम वृद्धमुखाच्छ्रोतव्यमिति विशेष तत्रफलादिनामाक्षराणि प्रश्नरूपाक्षराणि कृत्वा तेषांवर्गप्रमाणं वर्णप्रमाण सस्वरप्रमाणं कृत्वा मिथस्ताडित गुणित गुणिते सति स पिंडो भवतीत्यर्थ २ **भाषा-** अब गर्गमुनिप्रणित जो सूत्रकारिकारूप विद्या उसका सारलेके मोहनपंडितने संग्रह कियाहै सो प्रथम मंगलाचरण स्पष्टार्थ है १ आगे प्रश्नपिंड करनेका उदाहरण टीकाने स्पष्ट है ग्रंथ विस्तारभयसे नहि लीखता २ **टीका-** अथ कार्यसिद्धि असिद्धि प्रश्ने पिंडे द्वाभ्यां भक्ते शेषैके १ सिद्धी शून्ये कार्यनाश लाभालाभप्र-

**अथ प्रश्नकथनप्रकार सिद्ध्यसिद्धि क्रमात् द्वाभ्यां लाभालाभौ गमागमौ दिग्ज्ञानमष्टभिर्भक्ते शेषत प-रिकल्पयेत् ३ गर्भे त्रिभिः क्रमात् ज्ञेया नरनारी नपुंसका लोकज्ञानेपि चैतद्वत् कालज्ञानेपि चैतथा ४**

लब्धाकारपिंडाकमध्ये युक्तं तथा तेन प्रकारेण द्वाभ्यां भक्ते पिंडे एकशेषे १ लाभ शून्ये हानि गमागमप्रश्ने लब्धाके पिंडमध्ये युक्ते द्वाभ्यां भक्ते एकेन गमन शून्येन स्थिरता आगमनप्रश्ने पिंडे द्विभक्ते एकशेषे आगमन शून्ये स्थिरता अथ दिग्ज्ञानप्रश्ने पिंडे अष्टभि ८ र्भक्ते शेषांकात् दिश कल्पयेत् पूर्वादिदिशागणनीयेत्यर्थ अनेनैव सर्वकार्येषु युद्धग्रामादिषु यज्ञसत्रादिषु सिद्धि असिद्धि लाभालाभौ गमागमे चरस्थिरभावो विचार्यो ३ अस्या गर्भवत्या गर्भे किमस्तीति प्रश्ने पिंडे त्रिभिर्भक्ते एकशेषे नर द्वाभ्यां कन्या शून्येन नपुंसक ४ अथ दोलिकायां प्रश्ने चौर्यादिषु सर्वत्रापि स्वर्ग मृत्यु पाताल ज्ञाने पिंडे त्रिभिर्भक्ते एकशेषे स्वर्गलोकवासी द्विशेषे मृत्युलोकवासी त्रिशेषे पाताललोकवासि अन्यत्प्रयोजनं च किं नष्टवस्तु कुत्र वर्त्तते इति प्रश्ने अथ मम कार्यम भवद्भवति भविष्यतीति प्रश्ने चतुर्विधप्रकारेण कालज्ञाने भूत भविष्य वर्त्तमाने पिंडे त्रिभिर्भक्ते एकेन भूतकाल द्वाभ्यां भविष्यकाल शून्ये वर्त्तमानकाल प्रयोजनं मया कश्चिद्दूत प्रेषित तस्य कार्यमभवत् भविष्यति किं वा भवति एवं सर्वेषां ४ **भाषा-** ३।४ २

पिंडे कालक्रमेण भूतभविष्यवर्त्तमानाका १।२।३ भूते एकेन गुणिते भविष्ये द्वाभ्या वर्त्तमाने त्रिगुणिते इति विशेषपिंडोत्पत्ति पिंडे त्रिभिर्भ-
क्ते एकशेषे धातु द्विशेषे मूल शून्ये जीव प्रयोजनञ्च सामान्यत सर्वत्र मुष्टिचिंतन पिंडे तु एकशेषे मूल द्विशेषे जीव शून्ये धातुरिद प्रश्नकोविदै
दैवज्ञवरै ज्ञेयमित्यर्थ चकारात् पिंडे द्वाभ्या भक्ते एकशेषे धाम्य शून्ये अधाम्य तत्र धाम्ये दृष्टे ऽष्टादशविधा भेदा केचिद्दशविधा भेदा आ
हु. ५ धातुभेदमिति पिंडे दशभिर्भक्ते एकादिक्रमेण धातवो ज्ञेया स्वर्णादय. स्वर्ण १ रौप्य २ ताम्र ३ तारक ४ कास्य ५ पित्तल ६ सीस ७ जसत
८ मुक्त ९ लोह १० दशभिर्भक्ते यल्लब्ध पिंडे योज्य पुन द्वाभ्या भक्ते एकशेषे घटित धातु द्वाभ्या अघटित ७ घटिते ज्ञाते त्रिविध भेद घटिता

**अथ मूलमेवांतर्धानप्रश्नमाह: धातुर्मूलं तथा जीव मूलजीवश्च धातुक कालक्रमगुणात् पिंडात् विज्ञेय प्रश्न कोविदै: ५ अथ धातोर्दशभेदानाह धातुभेदं प्रवक्ष्यामि पिंडस्य दशशेषत स्वर्णरौप्य तथा ताम्र तारक कास्य पित्तल ६ शीषकं जसदं मुक्तं तालाभ क्रमतो दिवा तन्न द्वाभ्यां च शेषेण कालाग क्रमतो वदेत् ७ भूषणं व्यक्ति संज्ञाना त्रिभिरेवात्र भाजितं नाणकं चन तथा पात्रं विज्ञेयं सर्वदा बुधै ८ द्विपदस्कर्य पादश्चा विपद पादसंकुल: चतुर्भिर्भाजिते शेषे विज्ञेया: सर्वदा बुधै ९ देवता मनुजाश्चैव पक्षिणो राक्षसास्तथा चतुर्भिरेव ज्ञातव्या भाजित: शेषत: क्रमात् १० गौरश्यामं तथा मध्यं दीर्घं मध्यां च ह्रस्वका शिशु युवा तथा वृद्ध स्त्रिभिर्भक्ते विजायते ११**

घटित भागलब्ध यत्तन्मूलपिंडे विनिक्षिप्य त्रिभिर्भागदेय तदा एकशेषे पात्र द्वाभ्या भूषण शून्ये नाणक ८ भू
षणे ज्ञाते तूर्य भेद. भूषणज्ञानलब्ध यत्तन्मूलपिंडे विनिक्षिप्य पुन. चतुर्भिर्भक्ते एकशेषे द्विपदाभरण द्वाभ्या चतुष्पदाभरण त्रिभिरपदाभ
रण शून्ये पादसकुलाभरण ९ द्विपदे ज्ञाते चतुर्विधो भेद द्विपदज्ञानाद्यल्लब्ध तन्मूलपिंडे विनिक्षिप्य पुनश्चतुर्भिर्भक्ते एकेन देव द्वाभ्या नर त्रि
भि: पक्षी शून्ये राक्षसम्लेछास्तेषामाभरण १० अस्य जीवकांडे प्रयोजन ११ भाषा- ५ ६ ७ ८ ९ १० ११ ५ ६

देवमनुष्याभरणषड्विधप्रोक्त पिंडेषड्भिर्भागोदेय एकशेषेशिरोभूषण द्वाभ्यांश्रवण त्रिभि कंठ चतुर्भिर्बाहुभूषणं पंचभिर्जानु ष
ड्भिर्पादस्यज्ञेयानि १२ पिंडेत्रिभिर्भक्ते स्त्री१ पु२ नपुंसकानाभूषणानिइतिधात्व्ये अथाधात्व्येदृष्टेविशेष अधात्व्येदृष्टेयल्लब्धंतद्कमूल-
पिंडेविनिक्षिप्यपुन नवभिर्भागोदेय तच्छेषेफल १३ एकशेषेमृत्तिकेत्यादि स्पष्ट १४ अन्येभेदाऽनेकास्तेग्रंथबाहुल्यभयेननात्रोक्ता १५
पिंडेद्विभक्ते एकेनछिन्नद्वाभ्यामछिन्न यल्लब्धंतन्मूलेविनिक्षिप्यपुन द्विभागे एकेनग्राम्यद्वाभ्यामारण्य यल्लब्धंतन्मूलेविनिक्षिप्यपुन षड्
ड्भिर्भागोदेय १ शेषेमूल २ काष्ट ३ त्वक ४ पत्र ५ पुष्प ६ फलज्ञेय १६ यल्लब्धंतन्मूलेपुन सत्कालिकपिंडोभवतिइत्यर्थ तत्पिंडे ४ चतुर्भि

**नृदेवभूषणेज्ञातेषड्भिर्भक्तेविशेषके शिरःश्रवणकंठौचबाहूजानुपदस्तथा १२ नरस्त्रियोतथाक्लीबोत्रिभिर्भ**
**क्तेभिजायते भक्तेचनवभिःशेषभावसंबंधिचिंतनं १३ मृत्तिकांजनपाषाणहरितालमनःशिला मर्कतःपुष्परागं**
**चनीलंचविद्रुमंक्रमात् १४ अन्यव्यक्तिभवाभेदारस्माभिर्नप्रकथ्यते ग्रंथबाहुल्यभीत्याचज्ञेयमन्यत्रतःसदा-**
**१५ इतिधातुचिंताकांड अथमूलचिंताकांड. मूलभेदंप्रवक्ष्यामियथोक्तंशंभुनाधुना मूलंकाष्टंचत्व-**
**क्पत्रंपुष्पंचैवतथाफलं १६ षड्भिर्भक्तेविजानीयात्प्रश्नविद्याविचक्षणैः तरुवल्लीतथौषध्योतृणगुल्मादिकंतथा**
**१७ शुष्कमार्द्रंतथाद्वाभ्याभक्ष्याभक्ष्यंचवैतथा स्वदेशजंपरोत्थंवाकल्पनाभिर्विचिंतयेत् १८**

भक्ते शेषेके १ वृक्ष २ गु
ल्म ३ लता ४ वल्लीइत्येवंइष्टदेवगुरुसेवयाज्ञेय १७ यल्लब्धपिंडे युक्तपुनःद्विभागोदेय १ शेषेसुगंधयुक्त २ द्वाभ्यासुगंधरहित यल्लब्धपिंडेयुक्त
षड्भि६ भक्ते एकशेषे १ तिक्त २ कटुक ३ कषाय ४ आम्ल ५ क्षार ६ मिष्ट. इत्येवषड्रसा ज्ञेया पुन षड्भिर्भक्तेरक्तश्वेतनथापीतकृष्णाचित्रह
रीतकं एवमन्येबहुविधाभेदा शुद्धाऽशुद्ध अमृतंविष स्वगृहवान्यगृह गुप्तप्रकट सामान्यविशेषं स्त्रीहस्तवापुरुषहस्तकस्मिन्पात्रमध्येस्तिक्र
मेणागतलब्धयुक्तपिंडेऽष्टभक्ते १ शेषेधात्वादि २ पाषाणादि ३ मृत्तिका ४ काष्ट ५ चीणी ६ दंतपात्र ७ वृक्षपत्रपात्र ८ वस्त्रग्रंथि जलेनसंयुक्तमसं
युक्तंवा भक्ष्यमभक्ष्यंवा एतत्प्रकारेण बहुविधाभेदा अन्यग्रंथेनज्ञातव्या १८ **भाषा-** १२ १३ १४ १५ १६ १७ १८

इतिमूलचिंताकांड अथजीवचिंताभेदा जीवेदृष्टेद्वाभ्याभक्ते जीवितमृतक जीवितेदृष्टेचतुर्विधोभेद पिंडेचतुर्भागेशेषेक्रमे
द्विपद २ चतुष्पद ३ अपद ४ पादसकुलानामबहुपद यल्लब्धतन्मूलेयुक्ततोचतुर्भिर्भागोदेय एकशेषेदेव २ मनुज ३ पक्षी ४ चतु शेषेराक्ष
सा म्लेछा लब्धमूलेविनिक्षिप्यपिंडेचतुर्भिभक्ते एकशेषेबाल २ कुमार ३ युवा ४ वृद्ध मनुजेविशेष पिंडेचतुर्भिर्भक्ते यल्लब्धपिंडेयुक्त
पुन पंचभिर्भागोदेय एकशेषेब्राह्मण २ क्षत्रिय ३ वैश्य ४ शूद्र ५ म्लेछात्यज यल्लब्धतचतुर्भिर्भागोदेय यल्लब्धपिंडेयुक्तपुन त्रिभिर्भाग
एकशेषेउच्च २ नीच ३ सामान्य त्रिभागेयल्लब्धपिंडेयुक्तपुन द्विभागेनैक १ शेषेगोर २ कृष्ण द्विभागेयल्लब्धपिंडेयुक्तपुन द्विभागेएक
शेषे १ स्वदेशस्य २ अन्यदेशस्य द्विभागेयल्लब्धपिंडेयुक्तपुन द्विभागशेषे १ दूर २ समीप पिंडेअष्टभि ८ र्भक्ते लब्धेशांक क्रमेणपूर्वा

अथजीवचिंता कालसंधौतुसंप्रासेसकीर्णेचिंतयेद्बुधः एवं ... नजातिःस्यान्ततोभेदादिकंपुनः
१९ मौक्तिकंचैवभुवैडूर्यशाणाफलमथोपिवा सरागपद्मरागंदपं ... विस्तारमेवच २० यथाक्रमविभा
गेनमूलमिश्रेणचेतया इत्येवबहुधाचिंत्यंप्रश्नकालेमनीषिभिः २१ अस्थिरुधिरमांसानिचनभेदास्तथास्मृ
ता एवजीवेविचार्यस्यान्जीवितंमृतमेवच २२ इतिजीवचिंताकांड

द्विदिशाज्ञेया अथपक्षीज्ञातेविशेष पिंडेत्रिभक्तेशेषे १ ज
लचर २ स्थलचर ३ उभयचर यल्लब्धपिंडेयुतत्रिभिर्भाग शेषे १ तरुवासिन २ पर्वतवासिन ३ बिलवासिन यल्लब्धपिंडेयुतपुन द्विभागे
शेषे १ कर्मज २ योनिज द्विभागेयल्लब्धपिंडेयुक्तपुन चतुर्भिर्भाग शेषे १ योनि २ अंडज ३ स्वेदज ४ उद्भिज जरायुजालब्धपिंडेयुक्त चतु
र्भिभागोदेय एकशेषे १ खुरिण २ नखिन ३ दंतिन ४ शृंगिण यल्लब्धपिंडेयुक्तपुन द्विभागशेषे १ जलजा २ स्थलजा द्विभागेयल्लब्धमूलनिक्षिप्य
चतुर्भिभागेएकशेषे १ केशा २ अस्थि ३ चर्म ४ ... इतिद्विपदाजीवयोनौप्रश्नात्पन्नाकथुदुम्बर्याया पृथगुक्ताभिन्नभेदैर्भागेनव्यक्तिनिर्देश
इति ११+२२

अथनामवर्गाक्षराद्यु पलिज्ञान कार्यस्यअवधिज्ञान आयुषज्ञान जयाजय द्रव्यकोष्टादिज्ञान इत्यादिनानिर्णय पिंडेपंचभागशेषे १
एकाक्षी २ रोगी ३ शत्रु ४ आरर्भा ५ लक्ष्मी पिंडेत्रिभिर्भागेक १ शेषेधातु २ मूल ३ जीवा लब्धमूलेक्षिप्वासप्तभागेन शेषेनामाक्षराणि स-
रव्यायलब्धमूलेक्षिप्वा ८ अष्टभागशेषे अवर्गादिवर्गा ज्ञेया अवर्गेद्वाभ्याभाग कादिपंचवर्गेषुपंचभिर्भाग शेषयो यशवर्गयोश्चतुर्भिर्भा-
ग नामाधाराद्यवर्गस्यविज्ञेय प्रश्नमध्यत लब्धमूलेविनिक्षिप्यात्रिभिर्भागोतत पर १ पिंडाकनुनर्गेर्भक्तशेषत फल मादिशेत् नामाक्ष
राणा सरव्याचाधज्ञेयावर्गवर्णत २ पिंडेत्रिभिर्भागशेषकाल लब्धपुन पुन योज्यमष्टौत्रयस्त्रिशतद्वादशक्रमतोभजेत् ३ अष्टभागेवर्ग:
त्रयस्त्रिशद्भागेऽक्षराणिद्वादशभागेमात्रा ज्ञेया यत्रअक्षराणि सरव्यातत्र तत्र प्रतिपिंडे भागविभागयो द्वयः वर्गा वर्णाश्च मात्राश्चक्रमा
द्भागहरेत्सुधी एवनामनिबध स्याद्वर्गेणपरिभाषित ४ अथायुषविशये शत १०० सरव्याहतेपिंडे आयु सरव्याविनिर्दिशेत् आ

## पिंडेनामसमायुक्तेयायिस्थाइयथाक्रमं शून्येसंधिसमादेशोयुद्धकालेनसंशय. २३ ॥ ७ ॥ ॥

यु सवत्सरायेचवर्ग वर्णहताश्चये ५ द्वादशेनहृते भागेशेषेमासादिरुच्यते मासराशिहतावर्गात्रिंशत्भागहरेत्तत शेषाकेतिथयोज्ञेया
वाराद्याक्रमतोष्टमी ६ एवतावत्नामाक्षराणि भवति एतदुक्तभवति लब्धमूलेक्षिप्यअष्टभिर्भागे वर्णत लब्धमूले क्षेप्य मूलवर्गवर्णयोन
भाग अक्षराणिस्यु नामाक्षराणि भवति मूले ३६ योज्यत्रिभिर्भाग लब्धरय शेषेणलब्धविभजेत् पुन त्रिभागशेषत फल १ लाभ २
मध्यम ३ मरण अथप्रश्नकार्यस्याऽवधीविषये पिंडेषट्गुणिते ८ अष्टयुक्ते सप्तभिर्भागे शेषेरव्यादीनाउदय अथप्रकारात
रेण पिंडेषडग्नि ३६ सयुक्ते चन्द्रादि ७१ भागमाहरेत् लब्धाकैरवधिज्ञेयाप्रश्नकाले मनीषिभि. १ सूर्यादिदिवस पक्षा शुक्रेंदौमासवा
क् पतौ सौम्येशेषेचकुनच वर्षाणिस्याच्छनिश्चरे २ पिंडे ३६ योज्यसप्तभागशेषे रव्यादिनामुदय तथाहिशेषेणरव्यादिवारोदयोभवन्
ति तद्गुणाकात् पिंडेनगुणिना सप्तभिर्भागोदय शेषान्नहूर्गेशुद्धिवद्दिन प्राप्नोति अविमुक्तिशुद्ध नद्वशात्काल अत्र आरदिवाकरशेषे

**वार ध्रुवांकचक्र**

| सू | च | म | बु | गु | भृ | श |
|---|---|---|---|---|---|---|
| ५ | २१ | १४ | ९ | ८ | ३ | ११ |

**द्रव्यकोष्ठचक्रं.**

| ३ | ५ | ७ | ९ | ११ | १३ |
|---|---|---|---|---|---|
| अ | क | ख | ग | घ | आ |
| न | उ | प | फ | ऊ | ङ |
| ध | स | ओ | औ | ब | च |
| द | ष | ह | ल | भ | छ |
| थ | श | ० | क्ष | म | ज |
| त | व | अं | अ | य | ऋ |
| ण | ऐ | ऌ | र | ए | ञ |
| ड | ट | ठ | ठ | ट | ड |

दिवसा पक्षाश्च भृगुशशिनोर्मासा गुरोपूर्ववच्चशेषे सौम्येऋतव शनिश्वरे ७ ष्टस्युः १ आधाने शत्रुजये लाभालाभे गमागमे विजये कालकार्ये प्रवदेत्सर्वत्रैवं सदाविद्वान् २ पिंडे भाग ३ एकेनजय द्वाभ्यापराजय त्रिषुसंधिर्नामिलाप पिंडेभाग २ शेषे १ जीवित २ मरण यथाभागैश्चकल्पना अवर्गसंख्या २५२ कवर्गसंख्या २५ चवर्ग ३० टवर्ग ३५ तवर्ग ४० पवर्ग ४५ यवर्ग ३६ शवर्ग ४२ छकारसंख्या ३८ श्नकारसंख्या ३९ ञकारसंख्या ३९ इतिवर्गांकभेदचक्रे द्वितीयप्रकार अथद्रव्यकोष्टचक्रानयनमाह रेखा ससोर्द्धगा कार्यानवतिर्यक्तथालिखेत् अष्टाधिकाश्चत्वारिंशत्कोष्टकास्युस्तथाक्रमात् १ अकारादिविसर्गांतन्वतु कोणेतथालिखेत् ककारादिस्तथावर्णशेषेषुपुनरान्वितान् २ कृशानु ३ सायका ५ सप्त ७ नव ९ शर्वा ११ स्त्रयोदश १३ अन्वयव्य

**इत्येवमेकविंशाद्भिः श्लोकैर्लोकमनोरमा प्रश्नविद्यामयाप्रोक्तादेयाशिष्यायसाधवे २४**

तिरेकाभ्यामध्यशून्यसमतत ३ प्रश्नेचक्रोदिनानकान्वेदागै ६४ गुणयेत्तत भजेदष्टाब्धि ४८ भि शेषाद्द्रव्यकोष्टस्यनिर्णय ४ इतिनिस्वगुरोर्मत आनवरणस्थले भाडादिभिस्त्रिभि पूर्वादिदिग्चतुष्टये शेषकालाज्ञेया यत्रदिशिफल तादृश पूर्वाद्याप्रकरपचक्रन्यासः तत प्रश्नाक्षरोपरिविचार अनईश्वरमध्येज्ञेय यदिक्षिप्त अस्वरचतुष्टयअष्टादशाक्षरपर्यतनियम सूर्योदयादिदिननाथादिगार्द्धयामकाकस्वराणिकथितानिदिशाफलानि लाभा १ विनाश २ सुहृदागम ३ वृत्त ४ वृष्टि ५ संग्राम ६ मृत्यु ७ भय ८ मेवंवदंतिकाक १ एकपंचनवात्माना द्विषट्दशेचत्यन्यथा त्रिसप्तैकादशेमित्रवेदाष्टद्वादशेरिपु १ सूर्योदयात्पूर्वोदित — मर्द्धयामेयत्संख्याक तस्माद्यनकाकरुतैर्यत्रसंख्यांकफलंज्ञेय २३ इतिएकविंशतिश्लोकै प्रश्नविद्याप्रोक्तासासाधुशिष्यायदेयानतुधूर्त्तदुर्जनेभ्यइति २४ **भाषा—२३/२४** ६१ ६१ ६१

वर्गाष्टौ तेषा यत्प्रमाण वर्णमात्राप्रमाणच स्वरसयुत मिथोगुणित तस्यपिंड इति सज्ञा उक्तेप्यनुक्ते अथोदाहरण प्रष्टुर्मुखगतफल प्रश्नाक्षन
राणि प्रश्न रूपाणि आम्रफल इति आ २ म् १ र ८ अ १ फ ७ अ १ ल ९ अ १ स्वर वर्ण प्रमाण ३१ अथ सस्वर वर्गप्रमाण प्रष्टुर्मुखाद्वक्षराणिन
प्रश्नरूपाणि प्रश्नरूपाणि आम्रफल इति आ १ म्र ६ रि ७ अ १ फ ६ अ १ ल ७ अ १ सस्वरवर्गप्रमाणमिद ३० अनयो ३० । ३९ घातेजाताका
११७० अस्यपिंडसज्ञा भवतिइत्यर्थ त्यायेजी इतिप्रश्नाक्षराणितत्रवर्गप्रमाण ल ७ य ७ ए १ ज ३ एव १८ वर्गवर्णप्रमाण ल ३ य १ ए ११ ज २
सस्वर आ २ एकारस्य गृहीत एव ११ इकारस्य ४ वर्णप्रमाण सस्वर एकीकृत २४ करमात् विधिप्रोक्ताल ३ य १ आ २ ऐ ११ ज २ इ ४ एव
युतेजाता २४ वर्गप्रमाण एकीकृत १८ मिथस्ताडित २४ । १८ अस्याका ४३२ अथापिंड आम्रफलपिंडसख्या १ । ३९ निबुफलपिंडस
ख्या २ । २१० द्राक्षफ ० । ३ । १३२ एषुसदेह पिंडेनामसभामध्येयुक्ते १ नाणक २ मूलमिश्रेण ३ द्विपदाजीवयोनो ॠवाभूते १ भविष्ये २ वत्तमा

**पुनः उक्तंच विशेषेण उक्तेप्यनुक्ते मूलाकेतद्वत् सेप्यंसदाबुधैः स्वानुभूतविशेषोयमोहनेनविचारित**
**२५ इतिश्रीहरिकृष्णविनिर्मिते बृहज्ज्योतिषार्णवे पंचमेप्रश्नस्कंधे केरलप्रश्नाध्याये भगवतागर्गेणोक्ता**
**श्लोकमनोरमानामकंप्रश्नप्रकरणप्रथम १**

ने ३ गुणितेपिंडे भिभिर्भाग तेनधात्वादीनाज्ञान धातुर्विनायदाबुद्धि
द्वाभ्याभागहरेन्नत एकेनशेषत धाम्यमध्याम्यशून्यशेषत १ घटिताघटितभेदेनधाम्योपिद्विविधोभवेत् नेत्र २ भागेविजानीयादेक
शून्यमितिक्रमात् २ घटितेत्रिविधोभेद पात्रभूषणनाणक त्रिभिर्भागेविजानीयात्पात्रादिक्रमतोवदेत् ३ शिर श्रवणकंठौच बाहुधाण
च पादजषाड्भिर्भागे क्रमात् ज्ञेयपु र्गादिकथितपुन ४ अथनष्टवस्तुप्रश्नेविशेष मृते ५ श्चैवहरेद्भाग चिंतायाकारण वदेत् एकेनस्वगृहेनष्ट
द्वाभ्याचधरणीतले ५ त्रिभिर्देवालयेनष्टचतुर्भि परवेश्मनी पंचभिश्चान्त्यचौरैरत्यथवा गरमितकश्चित् ६ सीर्षबाहुरुबादादिचेष्टाभिर्विथास्
चन ब्राह्मणाक्षत्रियावैश्याशूद्राश्चेतिक्रमादिद ७ उर्ध्वदृष्टिर्भवेन्मूल अधोदृष्टिश्चजीवकस्तमदृष्टिर्भवे धातु मूलदेवेनभाषित ब्राह्मणेश्वेतपूष्पवेस्त्र
क्षत्रियेत्वियसज्ञकावैश्येच भाषा-२५-१

इष्टदेव स्यात्शूद्रे वैफ स्वोर्गरम १॥२।७।७।१।२।३ त्रिभिर्भागमेव ३ इत्यस्यापिडसरण्याइति अत्रद्वादशचतुर्दशौश्लोकौक्षेपकौ– इत्येवमेकविंशाद्भिरिति फलादे त्र्यधसमासिश्लोक उक्तेप्यनुक्त इतिअन्योक्तश्लोक इत्यनेनगर्गोक्ताएकविंशतिश्लोकाश्चेति २५ इ तिश्लोक्तटीकायामथम प्रकरण १ सूचिकाना सूक्ष्मबुध्धीनां पूर्वंत्वयाप्रकाशितमिति १ २ ३ ४ कलौतपोबलाभावेविद्याबलप्र

मैत्रेयउवाच भगवन्प्रश्नशास्त्रंतुसूचिकानाप्रकाशितं कलौयुगेतुमदानायज्ञातुंचवदस्वमे १ प राशरउवाच कृतेयुगेतुधर्मस्यपूर्णत्वात्तपसान्विताः सर्वेजानंतिभूतंचभवद्भावीद्विजोत्तम २ त्रे तायांतपसायुक्ताःकेचिज्जानंतिवैद्विजाः पश्यंतिद्वापरेशास्त्रज्ञानेनतपसापिच ३ कलौयुगेतुधर्म स्यपादमात्रव्यवस्थितिः तपःशक्याचुतस्मातुनशक्तामानवाभुवी ४ तथात्रपरमःशंभुर्लोकानुग्र हकांक्षया लक्षीकृत्यनिजांशक्तिंविद्याम्प्राधात्सईश्वरः ५ कलावपिचभक्तानांत्रिकालज्ञानदायिनी वेदादिर्वाग्भवंगौरीवदद्वयमथोगिरं ६ परमेश्वर्यंसिध्यर्थंवाग्भवस्यादयंमनुः सर्वज्ञेतिपदंपूर्वंनाथांत्तंपा र्वतीपदं ७ सर्वलोकगुरोपश्चाच्छिवेतिद्वयमक्षरं शरणंतुपदंपश्चात्वांप्रपन्नोस्मिनत्परं ८

दर्शयति तथेति अत्रकलौ ५ शास्त्रोक्त यथार्थ ज्ञानसिद्ध्ये मंत्रसिद्धि प्रतिपादयति कलावपीत्यादिना वेदादि प्रणव वाग्भव- ऐंबीज गौरिमंत्र प्रकाशः ॐऐंगौरीपरमेश्वरी गिरवदवद ऐं ६ ७ शिवमंत्र प्रकाश ॐसर्वज्ञ पार्वतीनाथ सर्वलोक गुरो शिव शरण त्वांप्रपन्नोस्मि पालय ज्ञान प्रदापय स्वाहा अथवाद्वयोर्मंत्रप्रकाश ॐऐंगौरीवदवद गिरऐं ॐसर्वज्ञपार्वतीनाथसर्वलोकगुरोशिव शरणत्वांप्रपन्नोस्मिपालयज्ञानदायकेति ८ भाषा-२५ इतिप्रकरण १ अबश्रीपराशरमुनीप्रणीतप्रश्नविद्याकहतेहैं स्पष्टार्थहै १+८ ६२

अनेन शडुगन्यासेन आभ्यागौरिशिव मंत्राभ्यां जपमात्रेणेत्यत्रलक्ष जपेन जपानुक्ते लक्षजप इति वचनात् गौरिध्यानमाह
९ १० शिवध्यानमाह स्पष्ट ११ होरास्कंधस्य बृहत्पाराशरीहोराया शकले पूर्वोत्तर खंडे १२ प्रश्नवक्तृलक्षणमाह वा-

पालयेतिपदंज्ञानप्रदाप्य ततःपरं अत्रमंत्रयो ऋषिर्दक्षिणामूर्त्ति गौरीपरमेश्वरीसर्वज्ञःशि
वोदेवतागायत्र्यनुष्टुपछंदो वाग्भवेनानुष्टुभावाषडगविधि. अनेनाभ्यांद्विजश्रेष्ठ बुद्धिस्कंविमलाभ
वेत् जपमात्रेण सिद्धिस्याद्देवज्ञत्वप्रकाशते उद्यानस्यैकवृक्षौध परेहेमवतीद्विज ९ क्रीडंतीभूषिता
गौरीशंकुवरस्यांशंकिविस्मिता देवदारुवनेतत्रध्यानस्तिमिततोवनं १० चतुर्भुजंत्रिनेत्रंचजटिलंचं
द्रशेखरं शंकुवर्णमहादेवध्यायेत्परममीश्वरं ११ दिग्विधंगणितंज्ञात्वाशास्त्रवास्कंधविमृश्यच हो-
रास्कंधस्यशकलेश्रुत्वार्थमवधार्यच १२ वाग्मीद्विजवरोयस्यान्नवंध्यातस्यभारती अलुब्धोनैष्ठि
कःशक्तोविनयप्रश्रयान्वितः १३ रत्नस्वर्णधनेवस्त्रपुष्पमूलफलानितु देवज्ञपुरतोदत्वापृच्छेद्दि
ष्टप्रियान्वितः १४ अथप्राङ्मुखआसीनःशंकिर्देवविद्यतः तिर्यगूर्ध्वांश्चतस्त्रस्तुरेखारज्जुसमालि
खेत् १५ एकीकुर्यात्तुचत्वारिमध्यस्थानिपदानिच तत्रपद्मलिखेद्रेखापद्ममध्यसकर्णिकं १६ इशा
न्यकोष्टादारभ्यमिनाद्याराशयःक्रमात् मेषवीथीवृषाद्यास्तुकौर्म्यांद्यामिथुनस्यतु १७ वीथयो-
मीनमेषौतुतुलाकन्येवृषस्यतु आरूढाद्वीथिभंयावत्तावछत्रंतुलग्नतः १८

| | | | |
|---|---|---|---|
| १२ | १ | २ | ३ |
| ११ | आरूढलग्न | | ४ |
| १० | | | ५ |
| ९ | ८ | ७ | ६ |

ग्मीति १३ अथप्रश्नविधि रत्नमिति १४ अथारूढलग्नवलयकर्त्तव्यतामाह उद्धारएवस्पष्टोर्थ
१५ १६ १७ वीथिचक्ररपष्टोर्थ १८ **भाषा**- ९।१०।११।१२।१३।१४।१५।१६+१८

वीथिचक्र

| मेष | मिथुन | वृषभ |
|---|---|---|
| २ | ८ | १ |
| ३ | ९ | १२ |
| ४ | १० | ७ |
| ५ | ११ | ६ |

छत्रानयनमग्ने ज्ञानप्रदीप शास्त्रव्याख्याया कथयिष्ये ग्रंथविस्तार भयानात्रोच्यते १९ २० २१ २२ २३ पापै दुरुधराजाते पाप ग्रह जन्मदुरुध रा योगेजाते २४ अन्यच्च मरण कालज्ञाने राहु कालयोगमाह राक्षीत्यादिनात्रयोदशभि प्रश्नकाले राहु काल समायोगे रा-हुश्च कालश्च राहुकालौ तयोस्समायोगे निश्चित मरण भवेत् अथतयोर्भुक्तिकालमाह द्वाभ्या अर्कोदयादित सूर्योदयमारभ्य मेषा

आरूढराशिलग्नचे च्छत्रंचापिभवेत्तथा जन्मलग्नंसमासाद्ययद्यत्प्रोक्तंतुजातके १९ तत्सर्वंप्रश्नलग्नेन-प्रश्नकालाद्दृढद्बुध यत्कालावधिलग्नंतत्तत्कालावधिकेस्थिते २० तेषांबलवतांचैवनिर्णयं स्वायुषस्मृत. आद्यद्रेष्काणमेत्यंच मृत्युदचक्रमाद्भवेत् २१ मृगादिकर्कटानां चमीनस्याप्यारूढलग्नतः लग्नेपृष्ठोदये-क्रूरवेश्मारतव्ययगायादि २२ धनेधर्मेकुजेमंदेचंद्रेरंध्रेमृतिर्भवेत् २३ पापैर्दुधराजातेलग्नकाम स्कूहं-स्थिते चंद्रेकेंद्रेविलग्नस्थेम्रियतेव्याधिनाध्रुवं २४ राहुकालसमायोगे मरणंनिश्चितंभवेत् मेषा द्व्युत्क्रमतोराहुर्वृषात्कालः क्रमाच्चरेत् २५ राशौराशौतुपंचाशत्भोगकालोविनाडिकः अर्कोदयादि ते श्वोभौभुजेनेचपुनःपुन २६ येक द्व्याब्धिरामेषुषडष्टानंतराःक्रमात् अर्कवारादितोराहुरात्राके वमुदीरित. २७

दि वृषपर्यंतं व्युत्क्रमतोवाममार्गेण प्रत्येक राशौ पचाशत् पल पर्यंतराहु अहोरात्रमध्येषंड्डारपरिभ्रमति एवकालश्च सव्य मार्गेणवृषान्मेषपर्यंत तद्यथाकेनचित्प्रश्नकृत तत्रेष्ट घटिका५ तदाराहु मेषादिवामगण नया वृश्चिक राशौ राहु कालश्च वृषादि क्रमेण तुलायामिति २५ २६ रात्रौ राहुभुक्ति माह सूर्यादिवारेषु क्रमेण रात्रो १।२ ४।३।५।६।८ क्रमेण पूर्वोक्त घट्यनतर पादोन घटिकाचतुष्टयं राहुकाल २७ **भाषा-** १९ २० २१ २२ २३ २४ + २७

अथ प्राच्याद्यष्टदिक्षु राहुकालयोः पश्चात्तरेण भुक्तिमाह स्पष्ट २८ २९ ३० ३१ ३२ ३३ एवं लग्नदिक्परत्वेन राहुका
लावुक्त्वा नक्षत्रतिथिवारपरत्वेन राहुकालयोर्भोगमाह नक्षत्रभोगे रेवतीमारभ्याश्विनीपर्यंतं प्रत्येकनक्षत्रे पलद्वयन्यूनसपाद-
घटिकाद्वयं राहुभोगः अश्विनीमारभ्य रेवतीपर्यंतं क्रमेण कालभोगः एवं वारे तिथावपि राहुकालयोर्भोगो विज्ञेयः ३४ ३५-

राहुरुत्क्रमशः प्राच्यां कालश्चक्रमशश्चरेत् उभौ सार्धविनाड्यैव राशिषु द्वादशस्वपि २८ इंद्रेंद्वग्निनि-
शाचरसमवारीशवायवः रुद्रचंद्रानलेशेशपापकेंद्रयमास्थिताः २९ रक्षोवायुस्ततोग्नाशयमवरुणरा-
क्षसाः वायुसोमराचीनाथरक्षोग्निजलपेंद्रवः ३० वायीशेंद्रयमापश्चाद्युग्मेंदोश्चनिशाचरः मरुद्व
रुणचंद्रेशपावकौ करुणो यमः ३१ वायुरुद्रशशींद्राग्निराक्षसाश्च ततः परं वायुरक्षः शशींद्रेशपाव
कांतकवारुणाः ३२ अर्कवारादितो वामं राहुः संचरति क्रमात् रुद्रः समीरः सोमाग्नियमौ थाधनिर्ऋ
तिर्जलं ३३ नक्षत्रेष्वपि च वारे च तिथौ चोत्क्रमतः क्रमात् अतिमासादादिमाद्राहुः कालश्च चरतस्तथा ३४
द्वयोर्योगे तु मरणमेकस्मिन्व्याधिरुच्यते नृपामूर्छा शरास्तत्वतिथि षोडषपंच च ३५ द्वितीये त्वष्टमे
भावस्त्वत्तरेत नुपातत्त नागाष्टेषुगुणा रुद्रा वाजिवेदाग पक्षकाः ३६ दशपंचाष्टयामेषाद्रश्मयः स-
प्रकीर्तिताः राशुयोगेषु सर्वेषु व्याधिः स्याद्बाधितो मृतिः ३७ लक्ष्मीयोगेषु सर्वेषु व्याधिस्तस्य न वापि
च वैधृतौ च व्यतिपाते सर्पभासंज्ञिते ३८ कुलीरे विषनाडीषु सूर्यदोशंच पंचसु पापयुक्ते च नक्षत्रे
राशौ तत्सुयुते पि च ३९ सधौ च मासशुन्यर्क्षे तिथिराशिषु जन्मभे विद्याष्टके च क्षीणेंदौ शत्रुग्रहनिरीक्षते
४० ३६ ३७ ३८ कुलीरविषनाड्यादिदोषा संहिता स्कंधोक्ता विज्ञेया ३९ ४० भाषा- २८ २९ + ४०

प्रश्नकालेगस्पर्शानान्मृत्युकालज्ञानमाह पादेति ४१ ४२ ४३ ४४ ४५ ४६ प्रष्टाप्रच्छक दैववित् दैवज्ञोवापादादी
न् स्पृष्ट्वा पृच्छतिवदतिवातदामरणनिर्दिशेत् ४७ अथशुभाशुभग्रहवशाद्रोगशांत्यशांतिनिर्णयमाह स्पष्ट ४८ ४९

पादपृष्ठंचजंघाचजानूनाभिंचगुल्फके कर्णौचचक्षुषीभालमास्यंकंठस्पृशेद्यदा ४१ व्याधिर्वाम्री-
यतेतद्वत्स्पृष्ट्वाराशिस्पृशेत्तुवा अष्टमर्क्षस्पृशेद्यद्वाकलांशादिषुवातथा वियद्बंधमृत्युर्क्षविनाशर्क्ष
मेववा सस्पृशेत्प्रश्नकालेतुव्याधिर्वातस्यवामृतिः ४३ शिरोललाटभ्रूनेत्रनासाकर्णकपोलका ओष्ठ
चचिबुककंठमंसौन्हृदयमेवच ४४ पार्श्वौचवक्षः कुक्षिश्चनाभिश्चकटिरेवच।जघनंचनितंबश्चलिंग-
मंडंचबस्तिंच ४५ ऊरूचजानुजंघाचगुल्फांघ्रिचाश्विभात्क्रमात् तैलाभ्यक्तोथवाशस्त्रधोजलगस्तत्समीपगः
४६ प्रष्टादैवविदंवाथमरणंतस्यनिर्दिशेत लग्नत्रिकेंद्रकामारिधर्मकर्मायगाःशुभाः ४७ रोगशां
तिकरानोचेत्रिपुनीचग्रहास्थिता एषुपापामृतिकरानोचेत्स्वर्क्षोच्चमित्रगाः ४८ यस्ययस्यशुभावा
थारिपुस्थानगताशुभाः यद्वात्रिकोणकेंद्रस्थास्तस्यतस्यशुभंपदा ४९ मृगकुक्ष्यादितःसूर्योरा
शिपूर्वापरार्धतः शनीशुक्राऽऽरचंद्रज्ञगुरवःशिशिरादिषु ५० अर्कभौमेत्तनोन्येर्वावायनाद्वतुरेव
च शुक्रारमंदेश्चंद्रज्ञजीवाश्चपरिकीर्तिता ५१ लग्नद्रेष्काणका प्रोक्तानवांशेनैवचापरे तत्पूर्वपर-
तोमासास्तिथिःस्यादनुपाततः ५२ लग्नात्रिकोणगोजीवोनवांशस्थोथवाभवेत् ज्ञात्वावयोनुरूपेण
अनुमानवशाद्वदेत ५३

अथ प्रश्नलग्नान्नष्टजातकमाह मृगेत्यादिना अस्योदाहरणादिकं पूर्वं जातकस्कंधे वि-
स्तारेण प्रतिपादितं द्रष्टव्यं तत्रैव ५० ५१ ५२ ५३ भाषा- ४१ ४२ ४३ ४४ ४५ ४६ ४७ ४८ ४९ + ५३-

५४ ५५ ५६ ५७ ५८ ५९ ६० ६१ ६२ ६३ अथ ग्रहाणां दृष्टिबलमाह ६४ ६५ स्थानबलमाह उच्चे-
त्यादिना ६६ अथ दिग्वीर्यमाह कुजार्कावित्यादिना ६७ **भाषा-** ५४ ५५ ५६ ५७ ५८



सूर्यस्थितांशतुल्यां वा तिथिं प्रोवाच भार्गवः राशौ रात्रिदिवाख्ये च जन्म स्यात्तु विलोमतः ५४ गतप्राणे
जन्मकाले तेच प्राणा भवन्त्यथ यद्राशिग शशामात्य समं वा स्पृशदंग ज ५५ त्रिकोणे तु बलाधिक्ये-
राशिर्लग्नात्तु यावतः चंद्रात्तावति भं वापि जन्मलग्नं विनिर्दिशेत् ५६ मीने मीनं तुलग्नं वा तथान्ये स्त्वन्य-
लग्नभं छायया संयुतं यामवारर्क्षतिथिराशय ५७ यावतस्तु धनिष्ठादि जन्मर्क्षं तत्र हि निर्द्दिशेत् कलांशा
दिषु यप्रोक्तमृक्षं तद्वा भवेदिद ५८ कलांशाधर्धहोरात्त प्रोक्तहारैर्विभावयेत् पृथकालिसीकृतं लग्नवर्ग
णाभिर्हृत पुनः आरूढ छत्रयोर्वीर्यवतोर्वर्गणमाहित ५९ ओजे योग समे हानिरित्तरस्य विधीयते स्वे
स्वैर्भक्तैर्भक्तं चतयोर्मासादय स्मृता. ६० यद्वा कलीकृतलग्नं तथा कुर्याद्विचक्षणः नवकस्य च शकाधि च यो
गं चैव करोत्पनः ६१ नवभिश्च कलांशाद्यैस्तथैवाद्यादिभिः क्रमात् एकाशीतिभिदा सतिनवकाद्योग
शोधने. ६२ येषां योगगते काले समासंधु सतायत राशिस्तु बलवान्स्वामिगुरुज्ञप्रेक्षणान्वित. ६३ अ
न्यैपापैरदृष्ट. स्यात् शुभ दृस्याप्रयोजयेत् चंद्रार्काचार्यशुक्रज्ञा पादं मित्रभकर्मणि ६४ पश्यंति च शनि
पूर्णमथ धर्मसुतौ गुरु सर्वार्धं बुधु मृत्यु च पूर्णं पश्यति भूमिज ६५ परे त्रिपादं पूर्णं च सर्वे पश्यंति सप्तम उ
च्चमूलसुहृत्स्वर्क्षस्वद्रेष्काणनवांशके ६६ स्थितस्य स्थानवीर्य स्यात् कुजार्कौ दशमे शनि सप्तम ज्ञे गुरो
लग्ने चंद्रशुक्रौ तु वेश्मनि ६७ ५९ ६० ६१ ६२ ६३ ६४ ६५ ६६ ६७

अथराश्यादिरश्मिनिबलमाह पायत्तसमाप्ति ६८ ६९ ७० ७१ ७२ ७३ ७४ ७५ ७६ इतिटीकायाद्वितीय-

दिग्वीर्यसंयुता एतेनान्यत्र प्रश्नकर्मणि मृगादिराशिषट्कस्थाचन्द्रार्कज्ञार्यभार्गवा ६८ बलवत कुजा कीत्तुककर्कटादिगतौतथा शुक्लपक्षे शशभा-कृष्णापापास्क बलिनस्तथा ६९ वक्रिणोबलिन खेटाश्चेष्टाबलसमन्विता शशभा पापादिवारान्मोबलिनस्यु क्रमात्स्मृत्ता ७० निसर्गबलिन.प्राग्वदेवस्यु प्रश्नकर्मणि लग्नहोराद्रेष्काणार्कनवाशा सप्तमाशक-७१ कालाश कालहोराचत्रिंशाशा षष्टिभागक-पूर्वपूर्वौबलिप्रोक्तोनबलीचोत्तरोत्तर ७२ प्रश्नलग्नकलिकृत्यनवघ्नभेनभाजितं शिष्टमात्मकसंस्थिते ७३ लब्धसप्तगुणवेदभक्तशिष्टमिहाशक नवाशसदृशलग्नयद्वाभिप्राकेभाजित ७४ सप्तास्तशिष्टलग्नचसप्तमप्तासिनिश्चिते सौम्यत्तदेवकर्मर्क्षे जन्मर्क्षवान्नवेद्बल ७५ इदशास्त्रंमयाप्रोक्तमाद्यत्तत्त्वसवृत नशिष्यायप्रदात्तव्यनापुत्रायकदाचन ७६ गुणशीलयुतायैवशिष्यायद्विजातये दातव्यंतुप्रयत्नेनवेदांगमिदमुत्तमं ७७ इतिश्रीबृहज्ज्योतिषार्णवेपंचमेप्रश्नस्कंधेकेरलप्रश्नाध्याये श्रीपराशरमुनिप्रणीतप्रश्नशास्त्रकथननामद्वितीयंप्रकरण २ अथपंचपक्षिप्रकरण विघ्नराजंनमस्कृत्यगिरंचैवतथाच्युतं चक्रपाणिंगुरुंचैवलिख्यतेसारसंग्रह १ नमस्कृत्यमहादेवसर्वशास्त्र-विशारद भविष्यदर्थबोधायपंचपक्षिप्रकाश्यते २ अनेनशास्त्रसारेणलोका कालत्रयंप्रति फलाफल-निद्दश्यतेसर्वकार्येष्वशाकित ३

प्रकरण २ गुरुपितर १ २ ३ भाषा- ६८ ६९ ७० ७१ ७२ ७३ ७४ ७५ ७६ ७७ इतिभाषामेप्रकरण सपूर्णभया २ अबपंचपक्षिप्रकरणकहतेहै १ २ ३ ६९

पृच्छक इति शेषः ४ ५ आरूढादारूढलग्नाद्वा वक्ष्यमाण दशमश्लोकोक्त आरूढस्वरात् वा प्रश्नलग्नात् प्रथमाक्षरतः नाम पृच्छक मुखोद्गत वर्णावल्या आद्यक्षरं तस्माद्वा पक्षिमृत्याद्य पक्ष्यनुरूप प्रश्नोत्तरं वदेदित्यर्थः ६। ७। ८ तत्र पक्षिज्ञानार्थं संज्ञामाह अक्षरमित्यादिना ७ चरितानि शुक्लकृष्णयो भोजन गमन राज्य निद्रा मरणरूपाणि वक्ष्यमाणानि ८ पक्षीणां वर्णस्वरान्

आगतं पृच्छकं दृष्ट्वा दैवज्ञ सावधानतः यद्यत्करोति कर्माणि तत्सर्वं तु विचारयेत् ४ शकुनानां क्रियायाः
स्यायुते युद्धे जयाजय येन विज्ञानमात्रेण सर्वज्ञत्वं प्रजायते ५ आरूढात्प्रश्नलग्नाद्वा प्रथमाक्षरतोपि वा-
ज्ञातव्यं चेष्टया चेति खगानां गतिरुत्तमा ६ अक्षरं पक्षिभूतं च दिग्देवत्वादिनानि च कालो वर्णो बलं मैत्री
धातुर्लिंगादयः क्रमात् ७ पश्वादि जाति संज्ञा च देहसंकल्पनादिभिः चरितानि च सर्वाणि वक्ष्यते वर्ण-
कैः क्रमात् ८ तत्रैव नाम्नि वर्णानां मात्रा मात्रा स्वरा मता कादिहान्तानु लिखेत्तु वर्णान् स्वराधोऽङ्गणो
ज्झितान् ९ कोष्टकमेण यो वाथ सस्वरो वर्णसंज्ञिकः यस्य नामाक्षरस्यादौ स्वरमारूढमुच्यते १० एकैक-
स्वरपंचानां वर्णानामधिपो भवेत् अकारादिस्वराणां च पंचानां च विभागतः ११ अकारः श्येन आख्या
तः इकारः पिंगलस्तथा उकारो वायसश्चैव एकारस्ताम्रशेखरः १२ ओकारो नीलकंठश्च स्वराश्च पक्षि
संज्ञकाः इति स्वरपक्षिवर्णपक्षीविचारः [illegible]क्षिणां तिथयः नंदा भद्रा जया रिक्ता
पूर्णा च तिथयः क्रमात् १३ एवं स्यात्सतिपतत् श्येनः षष्ठ्येकादशी तथा द्वितीया सप्तमी द्वादश्या दोषा-
क्तानिशाटनः १४ त्रितियाष्टमि त्रयोदश्या भोक्ता वायस उच्यते चतुर्थिनवमि चतुर्दश्या भोक्तानु कुक्कुटः
१५ दीनाज्ञान चक्रेण स्पष्टोर्थः ९ १० ११ १२ १३ १४ १५ भाषा- ४ ५ ६ ७ ८ ९ १० ११ + १५

९

प्रथमे रविभौमौनाम रविभौमयोर्मंगरे श्येनादि क्रम द्वितीयेपिंगले १६ तृतीये वायसे चतुर्थे कुकुटे पंचमे मयूरे मंदवार शनौ
मयूरादि क्रम इत्यर्थ अन ग कपक्ष क्रम भोगश्च प्र येक पक्षिण घटिकाषट १७ कृष्ण पक्षे वार परत्वे पक्षिक्रम १८ अ ग्रेसह

पंचमीदशमीपौर्णमास्याभोक्तामयूरक अथपक्षीणांवारा प्रथमेरविभौमौनाद्वितीयेचंद्रचंद्रजौ
१६ तृतीयेजीववारश्चचतुर्थे भृगुवासर पंचमेमंदवारश्चक्रमोयशुल्कपक्षके १७ श्येनार्कभौमारविज-
श्चकाक शिखिभृगु कुकुटकोज्ञसोमौ वाचस्पतिपिंगलिकृष्णपक्षेसूर्योदयात्षट् घटिकाप्रमाण १८
अथनक्षत्राणि भेकडस्याऽश्विनीपूर्वंपंचनक्षत्रमुच्यते तत क्रमात्द्वियाङ्क्षिश्चपंचपंचततपर अ
थपाठांतर तत क्रमात्षड्पंचषड्पंचवतारकाः १९ अथपक्षीणाराशय अकारेमेषसिंहालौ
इकन्यायुग्मकर्किणौ उकारेचधनुर्मीनौएकारेचतुलावृषौ २० ओकारमृगकुंभौचएतेराशीश्चराक्र
मात् अथपक्षीणांदिग्नियम प्राक्श्येन पिंगलोयाम्येपश्चिमकाकउच्यत २१ उत्तरेताम्रचूडश्चमयूरोमध्यकोणत श्येनाग्नौचतथेशैपिंगलोयाम्यनैरृतवायस. पश्चिमवायाईशानादि
चिकुक्कुट. मध्यमनीलकंठस्यादिग्बलास्थिरानिश्चितं अथतत्वानि क्षितिजलपावकवायूआकाशानि
यथाक्रम २२ अथेयपुनरुक्ति. क्षितिःप्रागमरेज्यश्चजलदक्षिणादिग्भृगुः वन्हि पश्चाधराक
तु.वायुश्चद्रजउत्तरे २३ गगनेचचतु.ष्कोणमध्येसूर्यसुत क्रमात् अथपक्षीणांदेवता क्षिति
ब्रह्माजलविष्णुस्तथारुद्रोहुताशनः २४

१९ २० २१ २२ २३ २४ भाषा- १६ १७
१८ १९ २० २१ २२ २३ २४ ६७ ६७

ईश्वर पवनोदेवस्तथाकाश. सदाशिव अथपक्षीणांब्रह्ममंत्रा सद्योजातोभवेद्भूमिर्वामदेवस्त
थाजल २५ अघोरस्त्वग्निरित्याहुस्तत्पुरुषोवायुरेवच ईशानोगगनस्थाणु पचब्रह्मयथाक्रम २६ अ
थपक्षीणापचवायव प्राणापानस्तथाव्यानउदानचसमानक पचभूतात्मकदेहवदत्पचात्मिनजगत् २७
अथपक्षीणाकाल भूतोमयुर:कुक्कुटश्चकुक्कुटोवर्त्तमानक भाविष्यदर्थबोधायश्येनवायसपाक्षिणौ २८
अथपक्षीणावर्ण. श्येनोहिरण्यवर्णश्चपिंगल शुल्कवर्णक. काकोरक्तसितश्चित्रोकुक्कुट श्यामल शि
खि२९ अथपक्षीणास्त्रिपुरुषसज्ञा श्येनोनरोवधु.कुक्कुटोपुरुषोवायसस्तथा कुक्कुट स्त्रीपुमाश्चै-
वविप्रादिकुलक्षण: ३० अथपक्षीणाविप्रादिजाति श्येन कुक्कुटोद्विजश्रेष्ट महीपालश्चवायस.
ताम्रचूडोवणिक्शूद्रोनीलकठश्चसंकर: ३१ अकाराद्यक्षराणातुब्रह्मक्षत्रविशादय ओंकारोअन्त्य
जातीनाइत्याहु.पक्षिवादिन ३२ अथपक्षीणापश्वादिजाति चतुष्पात्पिंगलोज्ञेय द्विपादोश्येनवा
यसौ ताम्रचूडोनरवीश्रृंगीशिखडीपाद्विजोरगौ ३३ पश्वादिजातिसज्ञानदेहसकल्पनादपि चरिता-
नीचसर्वाणिकथ्यतेवर्णकेक्रमात् ३४ अथपक्षीणाअवयवज्ञान श्येनोमुखकठबाहुकुक्कुटोवक्ष
स्कवायस कुक्कुट पृष्ठभागस्कशिखिपादयुगक्रमात् ३५ अथपक्षीणामूलजीवधातुज्ञान श्ये
नोमूलंतथाकुक्कुटोजीवोधातुश्चवायस: कुक्कुटोमूलजीवोचधातूमूलंभुजगभुग ३६

मूकप्रश्ने विशेषमाह स्पष्टोर्थः ३७ ३८ ३९ ४० ४१ ४२ ४३ एतेश्येनादयः सिंहावलोकमार्गेण नाम सिंहा
वलोकनवत् स्वदिक्स्थस्मात् द्वितीय त्यक्त्वा तृतीयदिगस्थ पक्षिणं पश्यती त्यर्थः ४४ ४५ कुक्कुटपिंगल ४६

उच्चावलोकने जीवो ह्यधो हि स्यात्तु मूलकं धातुर्वै समदृष्ट्या च दूतचेष्टां विलोकयेत् ३७ अथ मूलेजा
तेभेदाः शुक्रेचंद्रे गुल्मवल्लीलतामदे बुधस्य च पत्रं गुरोः फलं स्मृतं सूर्ये मूलं भौमे त्वक्चार्कजे ३८ अथ धा
तोर्जाते भेदाः शुक्रेचंद्रे भवेद्रौप्यं बुधे स्वर्णमुदाहृतं गुरौ रत्नयुतं हेम सूर्ये मौक्तिकमेव च ३९ भौमे
ताम्रं शनौ लोहं वाराणामुदयक्रमात् अथ कृष्णपक्षे नक्षत्रराशिक्रमः धनिष्ठा पंच नक्षत्रं आर्द्रा
दिद्वयभं शिखि अश्विनी पंच नक्षत्रं भोक्ता स्यात्ताम्रशेखरः काकः पुष्य चतुष्कं च उत्तरापंचकं पिंगलः
४१ भेरुंड इंद्रभात्पंच कृष्णपक्षे त्वयं क्रमः शिखी मृगघटकर्क्या अजाली सिंह कुक्कुटः ४२ काकस्तु
कन्यकायुक्तः पिंगलो धनमीनयोः भेरुंडस्य वृषश्च तुले कृष्णपक्षे गृहान्तरं ४३ अथ पक्षिणां दृष्टि
निर्णयः श्येनः काको मयूरश्च पिंगलस्ताम्रशेखरः सिंहावलोकमार्गेण पश्यंति दिनशर्वरी ४४ अ
थ पक्षिणां बलाबलनिर्णयः काको बलीयान्सर्वेभ्यस्तस्माच्छ्येनो हि दुर्बलः कुक्कुटाद्दुर्बलस्तस्मात्पिं
गलस्तस्य च ऊनकः ४५ तेभ्यो ऽपि शिखी दुर्बलः स्यात्पक्षिणां बलनिश्चयः बली मयूरात्कुक्कुटश्च ताम्रचू
डस्तयोर्बली ४६ मयूराद्बलवान् श्येनश्चतुर्णां वायसो बली अथ पक्षिणां परस्परं मित्रामित्रनि-
र्णयः मित्रं मयूरः श्येनो च शत्रुः कुक्कुटवायसौ ४७

पक्षिणां मित्रामित्र निर्णयमाह चक्रेण स्पष्टोर्थः ४७

भाषा- ३७ ३८ ३९ ४० ४१ ४२ ४३ ४४ ४५ ४६ ४७ छ छ

र्णय कर्त्तव्य इत्यर्थः उक्तंच पृच्छकस्य वच श्रुत्वा आद्यो वर्णस्वरस्तथा स्वरेणकल्पयेद्वार वारात् पक्षि प्रजायते पक्षिणो जायते वाक्यं वाक्याच्च फलसंभवइति अथैतद्विद्या सिद्ध्यै मंत्राराधनमाह नम पद्मासने वाणी यत्काम शब्दरूपिणी वदवद्वाग्वादिनी ताराद्याग्निप्रियांतिका चतुर्विंशाक्षरी विद्या सर्वप्रत्यक्ष कारिणी वर्णसंख्या सहस्रस्य जपात्सिद्धिरनुत्तमा इत्यलमतिविस्तरेण ५५ ५६ ५७ ५८ ५९ इतिसूत्राणि एवअन्यान्यपि लक्षणानि संतिउदाहरणक्रमेण अग्नेवक्ष्यति ६० **भाषा-**

**यस्यवारस्ययः पक्षीतमादौगणयेद्बुधः ज्ञातव्यंचप्रयत्नेनशुल्ककृष्णाविभेदतः ५५ शुल्कपक्षस्यदिवस कृष्णपक्षस्ययामिनी दिवसेकृष्णपक्षस्यशुल्कपक्षेनिशासुच ५६ आदित्यागारयो श्येनः गुरौतद्वच्चपिंगलः शनौकाकश्चविज्ञेयः कुक्कुटोबुधसोमयोः ५७ शुक्रेमयूररूपस्याच्चैतेशुल्केविहगमा एवंहिशुल्कपक्षस्य केवलपक्षिभेदतः ५८ सूत्राणिकथयिष्यामिपंचपंचयथाक्रमं पक्षयोरुभयोर्भावंवक्ष्येहंपंचपक्षिणा ५९ दिवारात्रौशुल्ककृष्णौनाडिषड्भिःप्रकीर्तिता अथशुल्कपक्षेसूत्राणिअरिपुकंतो १ तोतारिपुरं २ एकोनारिपु ३ उपद्रोहारि ४ विष्णुरंतेलोकः ५ इतिशुल्कपक्षेबीजएवंबहुप्रकारेणलक्षण अथकृष्णपक्षेसूत्राणिअनुमोदिते १ उन्मादितेव २ ओमित्यवास्क ३ इत्यवजुहो ४ एवजुहोति ५ इतिकृष्णपक्षेबीजं अथशुल्कपक्षेपक्षिणांचरित्राणि प्रथमंगरुडोभक्तामयूरस्तदनंतरं कुक्कुटोवायसश्चैवपिंगलस्तुयथाक्रमं ६०**

५४ अबप्रश्नदेखनेका उदाहरण बताते है कोई प्रच्छकने कार्तिककृष्णपक्षतिथि ५ इष्ट घटि ४ के समयमे प्रश्नकियाकि ( मेरा प्रारब्धोदयकैसा है ) तब आद्यवर्णमे उसका स्वर इ आया उसका कृष्णपक्ष कोष्टकमे गुरुवार आया उसका उदयपक्षी पिंगल भया उसपक्षीका इत्येवजुहो यह सूत्र है उसके चक्रमे इष्ट घटि ४ वास्ते ओइपक्षी रत्या उसका फल यह है की स्वतीतु दुर्यशो भवेत् यह बात सत्य अनुभवित है ५५ + ६० ७

